॥ गायत्री मञ्जरी ॥

एकदा तु महादेवं कैलाशगिरिसंस्थितम् ।
पप्रच्छ देवी वन्द्या विबुधमण्डलैः ॥ १॥

कतमं योगमासीनो योगेश त्वमुपाससे ।
येन हि परमां सिद्धिं प्राप्नुवान् जगदीश्वर ॥ २॥

श्रुत्वा तु पार्वती वाचं मधुसिक्तां श्रुतिप्रियाम् ।
समुवाच महादेवो विश्वकल्याणकारकः ॥ ३॥

महद्रहस्यं तद्गुप्तं यत्तु पृष्टं त्वया प्रिये ।
तथापि कथयिष्यामि स्नेहात्तत्त्वामहं समम् ॥ ४॥

गायत्री वेद मातास्ति साद्या शक्तिर्मता भुवि ।
जगतां जननी चैव तामुपासेऽहमेव हि ॥ ५॥

यौगिकानां समस्तानां साधनानां तु हे प्रिये ।
गायत्र्येव मता लोके मूलाधारो विदांवरैः ॥ ६॥

अति रहस्यमय्येषा गायत्री तु दश भुजा ।
लोकेऽति राजते पञ्च धारयन्ति मुखानि तु ॥ ७॥

अति गूढानि संश्रुत्य वचनानि शिवस्य च ।
अति संवृद्ध जिज्ञासा शिवमूचे तु पार्वती ॥ ८॥

पञ्चास्य दशबाहूनामेतेषां प्राणवल्लभ ।
कृत्वा कृपां कृपालो त्वं किं रहस्यं तु मे वद ॥ ९॥

श्रुत्वा त्वेतन्महादेवः पार्वतीवचनं मृदु ।
तस्याः शंकामपाकुर्वन् प्रत्युवाच निजां प्रियाम् ॥ १०॥

गायत्र्यास्तु महाशक्तिर्विद्यते या हि भूतले ।
अनन्य भावतो ह्यस्मिन्नोतप्रोतोऽस्ति चात्मनि ॥ ११॥

बिभर्ति पञ्चावरणान् जीवः कोशास्तु ते मताः ।
मुखानि पञ्च गायत्र्यास्तानेव वेद पार्वति ॥ १२॥

विज्ञानमयान्नमय-प्राणमय-मनोमयाः ।
तथानन्दमयश्चैव पञ्च कोशाः प्रकीर्तिताः ॥ १३॥

एष्वेव कोशकोशेषु ह्यनन्ता ऋद्धि सिद्धयः ।
गुप्ता आसाद्य या जीवो धन्यत्वमधिगच्छति ॥ १४॥

यस्तु योगीश्वरो ह्येतान् पञ्च कोशान्नु वेधते ।
स भवसागरं तीर्त्वा बन्धनेभ्यो विमुच्यते ॥ १५॥

गुप्तं रहस्यमेतेषां कोषाणां योऽवगच्छति ।
परमां गतिमाप्नोति स एव नात्र संशयः ॥ १६॥

लोकानां तु शरीराणि ह्यन्नादेव भवन्ति नु ।
उपत्यकासु स्वास्थ्यं च निर्भरं वर्तते सदा ॥ १७॥

आसनेनोपवासेन तत्त्व शुद्ध्या तपस्यया ।
चैवान्नमयकोशस्य संशुद्धिरभिजायते ॥ १८॥

ऐश्वर्यं पुरुषार्थश्च तेज ओजो यशस्तथा ।
प्राणशक्त्या तु वर्धन्ते लोकानामित्यसंशयम् ॥ १९॥

पञ्चभिस्तु महाप्राणैर्लघुप्राणैश्च पञ्चभिः ।
एतैः प्राणमयः कोशो जातो दशभिरुत्तमः ॥ २०॥

बन्धेन मुद्रया चैव प्राणायामेन चैव हि ।
एष प्राणमयः कोशो यतमानं तु सिद्ध्यति ॥ २१॥

चेतनाया हि केन्द्रन्तु मनुष्याणां मनोमतम् ।
जायते महतीत्वन्तः शक्तिस्तस्मिन् वशङ्गते ॥ २२॥

ध्यान-त्राटक-तन्मात्रा जपानां साधनैर्ननु ।
भवत्युज्ज्वलः कोशः पार्वत्येष मनोमयः ॥ २३॥

यथावत् पूर्णतो ज्ञानं संसारस्य च स्वस्य च ।
नूनमित्येव विज्ञानं प्रोक्तं विज्ञानवेत्तृभिः ॥ २४॥

साधना सोऽहमित्येषा तथा वात्मानुभूतयः ।
स्वराणां संयमश्चैव ग्रन्थिभेदस्तथैव च ॥ २५॥

एषां संसिद्धिभिर्नूनं यतमानस्य ह्यात्मनि ।
नु विज्ञानमयः कोशः प्रिये याति प्रबुद्धताम् ॥ २६॥

आनन्दावरणोन्नत्यात्यन्तशान्ति-प्रदायिका ।
तुरीयावस्थितिर्लोके साधकं त्वधिगच्छति ॥ २७॥

नाद बिन्दु कलानां तु पूर्ण साधनया खलु ।
नन्वानन्दमयः कोशः साधके हि प्रबुद्ध्यते ॥ २८॥

भूलोकस्यास्य गायत्री कामधेनुर्मता बुधैः ।
लोक आश्रयणेनामूं सर्वमेवाधिगच्छति ॥ २९॥

पञ्चास्या यास्तु गायत्र्याः विद्यां यस्त्ववगच्छति ।
पञ्चतत्त्व प्रपञ्चात्तु स नूनं हि प्रमुच्यते ॥ ३०॥

दशभुजास्तु गायत्र्याः प्रसिद्धा भुवनेषु याः ।
पञ्च शूल महाशूलान्येताः सङ्केतयन्ति हि ॥ ३१॥

दशभुजान्नामेतासां यो रहस्यं तु वेत्ति यं सः ।
त्रासं शूलमहाशूलानां ना नैवावगच्छति ॥ ३२॥

दृष्टिस्तु दोषसंयुक्ता परेषामवलम्बनम् ।
भयं च क्षुद्रताऽसावधानता स्वार्थयुक्तता ॥ ३३॥

अविवेकस्तथावेशस्तृष्णालस्यं तथैव च
एतानि दश शूलानि शूलदानि भवन्ति हि ॥ ३४॥

निजैर्दशभुजैर्नूनं  शूलान्येतानि तु दश ।
संहरते हि गायत्री लोककल्याणकारिणी ॥ ३५॥

कलौ युगे मनुष्याणां शरीराणीति पार्वति ।
पृथ्वी तत्त्व प्रधानानि जानास्येव भवन्ति हि ॥ ३६॥

सूक्ष्मतत्त्व प्रधानान्ययुगोद्भूत नृणामतः ।
सिद्धीनां तपसामेते न भवन्त्यधिकारिणः ॥ ३७॥

पञ्चाङ्ग योग संसिद्ध्या गायत्र्यास्तु तथापि ते ।

तद्युगानां सर्वश्रेष्ठां सिद्धिं सम्प्राप्नुवन्ति हि ॥ ३८॥

गायत्र्या वाममार्गीयं ज्ञेयमत्युच्चसाधकैः ।
उग्रं प्रचण्डमत्यन्तं वर्तते तन्त्र साधनम् ॥ ३९॥

अत एव तु तद्गुप्तं रक्षितं हि विचक्षणैः ।
स्याद्यतो दुरुपयोगो न कुपात्रैः कथंचन ॥ ४०॥

गुरुणैव प्रिये विद्या तत्त्वं हृदि प्रकाश्यते ।
गुरुं विना तु सा विद्या सर्वथा निष्फला भवेत् ॥ ४१॥

गायत्री तु पराविद्या तत्फलावाप्तये गुरुः ।
साधकेन विधातव्यो गायत्री-तत्त्व पण्डितः ॥ ४२॥

गायत्रीं यो विजानाति सर्वं जानाति स ननु ।
जानातीमां न यस्तस्य सर्वा विद्यास्तु निष्फलाः ॥ ४३॥

गायत्र्येवतपो योगः साधनं ध्यानमुच्यते ।
सिद्धीनां सा मता माता नातः किञ्चित् बृहत्तरम् ॥ ४४॥

गायत्री साधना लोके न कस्यापि कदापि हि ।
याति निष्फलतामेतत् ध्रुवं सत्यं हि भूतले ॥ ४५॥

गुप्तमुक्तं रहस्यं यत् पार्वति त्वां पतिव्रताम् ।
प्राप्स्यन्ति परमां सिद्धिं ज्ञास्यन्त्येतत् तु ये जनाः ॥ ४६॥

॥ इति ॥